# चम्पूरामायणे

# बालकाण्डम्

३२ –२०.०८.२०१८

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# मङ्गलम्

- लक्ष्मीं तनोतु नितरामितरानपेक्षम्
- अङ्घ्रिद्वयं निगम-शाखि-शिखा-प्रवालम् ।
- हैरम्बमम्बुरुह-डम्बर-चौर्य-निघ्नम्
- विघ्नाद्रि-भेद-शतधार-धुरन्धरं नः ॥

# पुनरावर्तनम् - गङ्गावतरणकुलकम्

- अथ वीचीचयच्छन्नदिगन्तगगनान्तरा । शशाङ्कशङ्खसम्भिन्नतारामौक्तिकदन्तुरा॥७८॥
- तरङ्गाकृष्टमार्ताण्डतुरङ्गायासितारुणा । फेनच्छन्नस्वमातङ्गमार्गणव्यग्रवासवा॥७९॥
- आविःशाखाशिखोन्नेयनन्दनद्रुमकर्षणा । एकोदकनभोमार्गदिङ्मूढदिवसेश्वरा॥८०॥
- आवर्तगर्तसम्भ्रान्तविमानप्लवविप्लवा । नीलजीमूतशैवालकृतरेखाहरित्तटा॥८१॥
- अवलेपभराक्रान्ता सुरलोकतरङ्गिणी। पपात पार्वतीकान्तजटाकान्तारगह्वरे॥८२॥

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam -Value Education- Technology

## अलब्धनिर्गमा शम्भोः कपर्दाददमरापगा ।
## दधौ दूर्वाशिखालग्नतुषारकणिकोपमाम् ॥८३॥

- अलब्ध-निर्गमा, शम्भोः, कपर्दात्, अमर-आपगा, दधौ, दूर्वा-शिखा-लग्न-तुषार-कणिका-उपमाम्
- दधौ = धृतवती
- का दधौ? अमरापगा = देवनदी गङ्गा
- कीदृशी अमरापगा? अलब्धनिर्गमा = अप्राप्त-बहिर्गमनमार्गा

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# अलब्धनिर्गमा शम्भोः कपर्दादमरापगा ।
# दधौ दूर्वाशिखालग्नतुषारकणिकोपमाम् ॥८३॥

- कस्मात् अलब्धनिर्गमा? कपर्दात् = जटाजूटात्
- कस्य कपर्दात्? शम्भोः = परमेश्वरस्य
- कां दधौ? दूर्वाशिखालग्नतुषारकणिकोपमाम् - दूर्वाशिखायाम् = दूर्वाग्रे, लग्ना = संसक्ता, या तुषारस्य = हिमस्य, कणिका = बिन्दुः, तदुपमाम् = तत्सादृश्यम्

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education - Technology

अलब्धनिर्गमा शम्भोः कपर्दादमरापगा ।
दधौ दूर्वाशिखालग्नतुषारकणिकोपमाम् ॥८३॥

- अन्वयः – शम्भोः कपर्दात् अलब्धनिर्गमा अमरापगा दूर्वाशिखालग्नतुषारकणिकोपमां दधौ ।
- तात्पर्य्यम् – परमेश्वरस्य जटाजूटात् बहिर्गमनमार्गम् अप्राप्य देवनदी गङ्गा दूर्वाग्रे संसक्तस्य अल्पस्य हिमबिन्दोः सादृश्यं प्राप्तवती ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

# अलब्धनिर्गमा शम्भोः कपर्दाद्मरापगा ।
# दधौ दूर्वाशिखालग्नतुषारकणिकोपमाम् ॥८३॥

- अलब्धनिर्गमा – न लब्धः, अलब्धः निर्गमः यया सा
- शम्भोः – उकारान्तः, पुं, ६.१ । "शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः"
- कपर्दात् – अकारान्तः, पुं, ५.१ । "कपर्दोऽस्य जटाजूटः" (अमरः)
- अमरापगा – अमराणाम् आपगा । "स्रोतस्वती द्वीपवती स्रवन्ती निम्नगापगा"

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# अलब्धनिर्गमा शम्भोः कपर्दादमरापगा ।
# दधौ दूर्वाशिखालग्नतुषारकणिकोपमाम् ॥८३॥

- दधौ – "डुधाञ् धारणपोषणयोः" – लिट्, प्रथम.१
- दूर्वा... – दूर्वायाः शिखा, दूर्वाशिखायां लग्ना, तुषारस्य कणिका, दूर्वाशिखालग्ना तुषारकणिका, दूर्वा...कणिकायाः उपमा, ताम्
- उपमालङ्कारः

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

अदृष्ट्वा तां नदीं तत्र तुष्टाव परमेश्वरम् ।
भगीरथो विधेः क्रौर्यात्परिक्षीणमनोरथः ॥८४॥

- अदृष्ट्वा, ताम्, नदीम्, तत्र, तुष्टाव, परमेश्वरम्, भगीरथः, विधेः, क्रौर्यात्, परिक्षीण-मनोरथः
- तुष्टाव = स्तुतवान्
- कं तुष्टाव? परमेश्वरम् = महादेवम्
- कः तुष्टाव? भगीरथः

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

# अदृष्ट्वा तां नदीं तत्र तुष्टाव परमेश्वरम् ।
# भगीरथो विधेः क्रौर्यात्परिक्षीणमनोरथः ॥८४॥

- कथम्भूतः भगीरथः? परिक्षीणमनोरथः = निराशः
- कस्मात् कारणात् परिक्षीणमनोरथः? विधेः क्रौर्यात् = दैवप्रातिकूल्यात्
- किं कृत्वा? अदृष्ट्वा = अनवलोक्य
- काम् अदृष्ट्वा? तां नदीम् = मन्दाकिनीम्
- कुत्र अदृष्ट्वा? तत्र = परमेश्वरस्य जटाजूटे

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# अदृष्ट्वा तां नदीं तत्र तुष्टाव परमेश्वरम् ।
# भगीरथो विधेः क्रौर्यात्परिक्षीणमनोरथः ॥८४॥

- अन्वयः – भगीरथः तां नदीं तत्र अदृष्ट्वा विधेः क्रौर्यात् परिक्षीणमनोरथः परमेश्वरं तुष्टाव ।
- तात्पर्य्यम् – भगीरथः महादेवस्य जटाजाले संलग्नां गङ्गां बहिः अप्रसृतां वीक्ष्य निराशः सन् पुनरपि परमेश्वरमुद्दिश्य तपश्चचार ।

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# अदृष्ट्वा तां नदीं तत्र तुष्टाव परमेश्वरम् ।
# भगीरथो विधेः क्रौर्यात्परिक्षीणमनोरथः ॥८४॥

- तुष्टाव – "ष्टुञ् स्तुतौ" – लिट्, प्रथम.१
- परिक्षीणमनोरथः – परिक्षीणः मनोरथः यस्य सः

गङ्गा सप्ताकृतिर्जाता न्यपतद्धरमूर्धनि ।
तेन स्तुत्या प्रसन्नेन क्षिप्ता बिन्दुसरस्यपि ॥८५॥

- गङ्गा, सप्त-आकृतिः, जाता, न्यपतत्, धर-मूर्धनि, तेन, स्तुत्या, प्रसन्नेन, क्षिप्ता, बिन्दु-सरसि, अपि
- न्यपतत् = पपात
- कुत्र न्यपतत्? धरमूर्धनि = पर्वतमस्तके, हिमालयशिखरे
- पुनः कुत्र न्यपतत्? बिन्दुसरसि = बिन्दुसरोवरनामके क्षेत्रे अपि

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam-Value Education-Technology

# गङ्गा सप्ताकृतिर्जाता न्यपतद्धरमूर्धनि ।
# तेन स्तुत्या प्रसन्नेन क्षिप्ता बिन्दुसरस्यपि ॥८५॥

- का न्यपतत्? गङ्गा = मन्दाकिनी
- कीदृशी गङ्गा? क्षिप्ता = प्रेरिता
- केन क्षिप्ता? तेन = परमेश्वरेण
- कीदृशेन तेन? प्रसन्नेन = तुष्टेन
- कया प्रसन्नेन? स्तुत्या = भगीरथस्य प्रार्थनया
- पुनः कीदृशी गङ्गा? सप्ताकृतिः जाता = सप्तसु धारासु विभक्ता

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam-Value Education-Technology

# गङ्गा सप्ताकृतिर्जाता न्यपतद्धरमूर्धनि ।
# तेन स्तुत्या प्रसन्नेन क्षिप्ता बिन्दुसरस्यपि ॥८५॥

- अन्वयः – स्तुत्या प्रसन्नेन तेन क्षिप्ता गङ्गा सप्ताकृतिर्जाता धरमूर्धनि, बिन्दुसरसि अपि न्यपतत् ।
- तात्पर्य्यम् – भगीरथस्य प्रार्थनया तुष्टः परमेश्वरः गङ्गां भूमौ क्षिप्तवान् । सप्तसु धारासु विभक्ता गङ्गा हिमालयशिखरे पपात, तस्याः बिन्दवः भगीरथस्य तपःक्षेत्रेऽपि पतिताः, यैः बिन्दुसरोवरनामकं पुण्यतीर्थं बभूव ।

# गङ्गा सप्ताकृतिर्जाता न्यपतद्धरमूर्धनि ।
# तेन स्तुत्या प्रसन्नेन क्षिप्ता बिन्दुसरस्यपि ॥८५॥

- सप्ताकृतिः – सप्त आकृतयः यस्याः सा
- धरमूर्धनि – धरस्य मूर्धा, तस्मिन् । नकारान्तः, पुं, ७.१ । "महीध्रे शिखरि-क्ष्माभृद्-अहार्य-<u>धर</u>-पर्वताः" (अमरः)
- स्तुत्या – इकारान्तः, स्त्री, ३.१ । "ष्टुञ् स्तुतौ" + क्तिन् । "स्तवः स्तोत्रं <u>स्तुति</u>र्नुतिः"

# तासु प्राचीं गतास्तिस्रस्तिस्रः प्राचेतसीं दिशम् ।
# अन्या पितृक्रियोद्युक्तभगीरथपथानुगा ॥८६॥

- तासु, प्राचीम्, गताः, तिस्रः, तिस्रः, प्राचेतसीम्, दिशम्, अन्या, पितृ-क्रिया-उद्युक्त-भगीरथ-पथ-अनुगा
- गताः = प्रावहन्
- काः गताः? तिस्रः = ह्लादिनी-पावनी-नलिनीनामिकाः
- कासु तिस्रः? तासु = गङ्गायाः सप्तसु धारासु
- कुत्र गताः? प्राचीम् = पूर्वां दिशम् उद्दिश्य

vyoma
॥वाचं धेनुमुपासीत॥
Samskritam-Value Education-Technology

# तासु प्राचीं गतास्तिस्रस्तिस्रः प्राचेतसीं दिशम् ।
# अन्या पितृक्रियोद्युक्तभगीरथपथानुगा ॥८६॥

- पुनः काः गताः? (तासु) तिस्रः = सुचक्षुः, सीता, सिन्धुः च
- कुत्र गताः? प्राचेतसीम् दिशम् = पश्चिमां दिशम्
- (जाता) = अभूत्
- का जाता? अन्या = गङ्गायाः सप्तमी धारा
- कीदृशी जाता? पितृक्रियोद्युक्तभगीरथपथानुगा = सगराणां तर्पणं चिकीर्षतः भगीरथस्य मार्गम् अनुसरमाणा

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam-Value Education

# तासु प्राचीं गतास्तिस्रस्तिस्रः प्राचेतसीं दिशम् ।
# अन्या पितृक्रियोद्युक्तभगीरथपथानुगा ॥८६॥

- अन्वयः – तासु तिस्रः प्राचीं गताः, तिस्रः प्राचेतसीं दिशं गताः । अन्या पितृक्रियोद्युक्त-भगीरथपथानुगा [जाता]
- तात्पर्य्यम् – गङ्गायाः सप्तसु धारासु तिस्रः (ह्लादिनी, पावनी, नलिनी) पूर्वां दिशं गतवत्यः । तिस्रः (सुचक्षुः, सीता, सिन्धुः) पश्चिमां दिशं गतवत्यः । सप्तमी धारा पितृणां तर्पणं चिकीर्षतः भगीरथस्य मार्गम् अनुसृतवती ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education ...

# तासु प्राचीं गतास्तिस्रस्तिस्रः प्राचेतसीं दिशम् ।
# अन्या पितृक्रियोद्युक्तभगीरथपथानुगा ॥८६॥

- अनेन तोषितश्चाभूदत्यर्थं रघुनन्दन । विससर्ज ततो गङ्गां हरो बिन्दुसरः प्रति ॥
- तस्यां विसृज्यमानायां सप्त स्रोतांसि जज्ञिरे । ह्लादिनी पावनी चैव नलिनी च तथाऽपरा । तिस्रः प्राचीं दिशं जग्मुः गङ्गाश्शिवजलाश्शुभाः ॥
- सुचक्षुश्चैव सीता च सिन्धुश्चैव महानदी । तिस्रस्त्वेता दिशं जग्मुः प्रतीचीं तु शुभोदकाः ॥
- सप्तमी चान्वगात्तासां भगीरथमथो नृपम् । भगीरथोऽपि राजर्षिर्दिव्यं स्यन्दनमास्थितः । प्रायादग्रे महातेजा गङ्गा तं चाप्यनुव्रजत् ॥

# तासु प्राचीं गतास्तिस्रस्तिस्रः प्राचेतसीं दिशम् ।
# अन्या पितृक्रियोद्युक्तभगीरथपथानुगा ॥८६॥

- प्राची – “प्राची-अवाची-प्रतीच्यः ताः पूर्वदक्षिणपश्चिमाः” (अमरः)
- प्राचेतसी – प्रचेतसः इयम् । “प्रचेता वरुणः पाशी” (अमरः) ।
- दिशम् – शकारान्तः, स्त्री, २.१ । “दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः”
- पितृ... – पितृणां क्रिया । पितृक्रियायाम् उद्युक्तः । पितृक्रियोद्युक्तः भगीरथः । पितृक्रियोद्युक्तभगीरथस्य पन्थाः । अनुगच्छतीति अनुगा । पितृ....पथः अनुगा ।

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam - Value Education

# सैषा भागीरथी जह्नोः सत्रक्षेत्रं समावृणोत् ।
# तां स पीत्वा ततः शान्तो जह्नौ श्रोत्रेण वर्त्मना ॥८७॥

- सा, एषा, भागीरथी, जह्नोः, सत्र-क्षेत्रम्, समावृणोत्, ताम्, सः, पीत्वा, ततः, शान्तः, जह्नौ, श्रोत्रेण, वर्त्मना
- समावृणोत् = आवृतवती
- कं समावृणोत्? सत्रक्षेत्रम् = यागभूमिम्
- कस्य सत्रक्षेत्रम्? जह्नोः = जह्नुमहर्षेः
- का समावृणोत्? सा एषा भागीरथी = भगीरथम् अनुगच्छन्ती गङ्गा

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education

# सैषा भागीरथी जह्नोः सत्रक्षेत्रं समावृणोत्।
# तां स पीत्वा ततः शान्तो जहौ श्रोत्रेण वर्त्मना॥८७॥

- जहौ = त्यक्तवान्
- कां जहौ? ताम् = गङ्गाम्
- कः जहौ? सः = जह्नुः
- किं कृत्वा जहौ? पीत्वा = निपीय
- कदा जहौ? ततः = गङ्गायां समन्ततः पीतायाम्

सैषा भागीरथी जह्नोः सत्रक्षेत्रं समावृणोत् ।
तां स पीत्वा ततः शान्तो जहौ श्रोत्रेण वर्त्मना ॥८७॥

- कथम्भूतः सन् जहौ? शान्तः = भगीरथस्तुत्या कोपान्मुक्तः
- केन जहौ? वर्त्मना = मार्गेण
- केन वर्त्मना? श्रोत्रेण = कर्णेन

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education

# सैषा भागीरथी जह्नोः सत्रक्षेत्रं समावृणोत् ।
# तां स पीत्वा ततः शान्तो जह्नौ श्रोत्रेण वर्त्मना ॥८७॥

- अन्वयः – सैषा भागीरथी जह्नोः सत्रक्षेत्रं समावृणोत् । सः तां पीत्वा ततः शान्तः श्रोत्रेण वर्त्मना जह्नौ ।
- तात्पर्य्यम् – भगीरथम् अनुगच्छन्ती गङ्गा मार्गे जह्नुमहर्षेः यागभूमिम् जलैः आप्लावितवती । क्रुद्धः जह्नुः गङ्गां समन्ततः पीतवान् । ततश्च भगीरथस्य स्तुत्या प्रसन्नः तां कर्णमार्गेण बहिः त्यक्तवान् ।

vyoma
॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education

# सैषा भागीरथी जह्नोः सत्रक्षेत्रं समावृणोत् ।
# तां स पीत्वा ततः शान्तो जह्नौ श्रोत्रेण वर्त्मना ॥८७॥

- यतो भगीरथो राजा ततो गङ्गायशस्विनी । जगाम सरितां श्रेष्ठा सर्वपापप्रणाशिनी ॥
- ततो हि यजमानस्य जह्नोरद्भुतकर्मणः । गङ्गा सम्प्लावयामास यज्ञवाटं महात्मनः ॥
- तस्यावलेपनं ज्ञात्वा क्रुद्धो यज्वा तु राघव । अपिबच्च जलं सर्वं गङ्गायाः परमाद्भुतम् ॥
- ततो देवास्सगन्धर्वा ऋषयश्च सुविस्मिताः । पूजयन्ति महात्मानं जह्नुं पुरुषसत्तमम् ।
- ततस्तुष्टो महातेजाः श्रोत्राभ्यामसृजत् पुनः । तस्माज्जह्नुसुता गङ्गा प्रोच्यते जाह्नवीति च ॥

सैषा भागीरथी जह्नोः सत्रक्षेत्रं समावृणोत् ।
तां स पीत्वा ततः श्रान्तो जहौ श्रोत्रेण वर्त्मना ॥८७॥

- भागीरथी – भगीरथस्य अपत्यं स्त्री । भगीरथ + अण् + ङीप् ।
- समावृणोत् – सम्+आ+वृञ् वरणे – लङ्, प्रथम.१
- जहौ – “ओहाक् त्यागे” – लिट्, प्रथम.१
- श्रोत्रेण – अकारान्तः, नपुं, ३.१ । “कर्णशब्दग्रहौ श्रोत्रं” (अमरः)
- वर्त्मना – नकारान्तः, पुं, ३.१ । “अयनं वर्त्म-मार्ग-अध्व-पन्थानः पदवी सृतिः” (अमरः)

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education

# तया तटिन्या जाह्नव्या प्रापयन्त्रिदिवं पितॄन् ।
# भगीरथः पुरं प्राप परिपूर्णमनोरथः ॥८८॥

- तया, तटिन्या, जाह्नव्या, प्रापयन्, त्रिदिवम्, पितॄन्, भगीरथः, पुरम्, प्राप, परिपूर्ण-मनो-रथः
- प्राप = प्राप्तवान्
- कं प्राप? पुरम् = नगरम्
- कः प्राप? भगीरथः
- कीदृशः भगीरथः? परिपूर्णमनोरथः = सफलः

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education

# तया तटिन्या जाह्नव्या प्रापयन्त्रिदिवं पितॄन् ।
# भगीरथः पुरं प्राप परिपूर्णमनोरथः ॥८८॥

- कथम्भूतः परिपूर्णमनोरथः? प्रापयन् = नयन्
- कान् प्रापयन्? पितॄन् = सगरपुत्रान्
- कं प्रापयन्? त्रिदिवम् = स्वर्गम्
- कया प्रापयन्? तटिन्या = नद्या
- कया तटिन्या? तया जाह्नव्या = जह्नोः कर्णान्निर्गतया गङ्गया

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education ...

तया तटिन्या जाह्नव्या प्रापयन्त्रिदिवं पितॄन् ।
भगीरथः पुरं प्राप परिपूर्णमनोरथः ॥८८॥

- अन्वयः – तया जाह्नव्या तटिन्या पितॄन् त्रिदिवं प्रापयन् भगीरथः परिपूर्णमनोरथः पुरं प्राप ।
- तात्पर्य्यम् – जह्नोः कर्णान्निर्गता गङ्गा "जाह्नवी" इति ख्याता । तां नदीं पातालं नीत्वा सगरपुत्राणां सद्गतिं साधयित्वा भगीरथः सफलसङ्कल्पः सन् स्वनगरं प्रत्यगच्छत् ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education ...

# तया तटिन्या जाह्नव्या प्रापयन्त्रिदिवं पितॄन् ।
# भगीरथः पुरं प्राप परिपूर्णमनोरथः ॥८८॥

- तटिन्या – ईकारान्तः, स्त्री, ३.१ । “तटिनी ह्रादिनी धुनी” (अमरः)
- जाह्नव्या – जह्नोः अपत्यं स्त्री । जह्नु + अण् + ङीप् ।
- प्रापयन् – प्र + “आप्लृ व्याप्तौ” + णिच् + शतृ । तकारान्तः, पुं, १.१ ।
- त्रिदिवम् – अकारान्तः, पुं, २.१ । “स्वरव्ययं स्वर्ग-नाक-त्रिदिव-त्रिदशालयाः” (अमरः)
- परिपूर्णमनोरथः – परिपूर्णः मनोरथः यस्य सः

# सङ्क्षेपः

- परमेश्वरस्य कपर्दे संलग्ना गङ्गा
- परमेश्वरं तोषयितुं भगीरथस्य प्रयत्नः
- गङ्गायाः सप्त धाराः – तिस्रः पूर्वां दिशं गताः, तिस्रः पश्चिमाम्
- भगीरथम् अनुगता भागीरथी
- जह्नोः यज्ञभूमिसंप्लवः, जह्नुना पीता विसृष्टा च जाह्नवी
- सगरपुत्राणां सद्गतिप्राप्तिः






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in








- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in